ௐ

# ஸ்வதர்ம போதினீ

தமிழ் உரையுடன்

இயற்றியவர்
ஸ்ரீ தக்ஷிணாமூர்த்தி சாஸ்த்ரி
மேல்மங்கலம்.

ஹரிஸமய திவாகரம் பிரஸ்
மதுரை.
1938.

१

ॐ

सत्यं वद ஶ்ரீ: धर्मं चर

ओं श्री सच्चिदनन्तानन्द परब्रह्मस्वरूप सनातन धर्मेश्वराय नमः
ओं श्री महागणपतये नमः
ओं श्री परमगुरुभ्यो नमः
ओं श्री, आदित्यांबिका विष्णुगणनाथ महेश्वरेभ्यो नमोनमः

अथों

श्रीहालास्ये श्रीप्रत्यङ्गङ्गळे ग्रामवरिष्ठे
कृतवासेन आत्रेयगोत्रजेन पद्मनाभसूनुना
श्री दक्षिणामुर्तिशर्मणा कल्यब्दे 5029
श्री प्रभवनाम संवत्सरादौ सर्वेश्वराज्ञया
365½ श्लोकरूपेण

# ॥ विरचितेयम् ॥

तत्वदर्शिन्याख्य द्रविडतात्पर्य संयुक्ता
स्वधर्मबोधिनीनाम काऽपि ग्रन्थमालाद्य S

श्रीमधुरापुर्याम्
हरिसमयदिवाकरयन्त्रणालये
गते कल्यब्दे 5038 ईश्वरनाम संवत्सरे
मुद्रापितासती नितरां प्रकाशत इति शं ॥



## ॥ अथ भूमिका ॥

स्वस्तिप्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तुनित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥

ओं भोः ?

सदैव सच्चिदनन्तानन्दरूपा स्सर्वे मनुजवर्ग सोदराः ? स्वस्वरूपास्मरणशीला वयमज्ञानेन । तस्मान्नानानित्य सुखदुःखात्मक प्रपञ्चविषया स्सर्वेऽपि समुद्रवीचिवद्दृश्यन्ते तथैव चानुभूयन्ते ते तु सर्वे कस्मात्, कदा, किमर्थं जाताश्चेतितान्प्रति प्रष्टुं वक्तुं च "किंबहुना" मन्तुमपि न वयं शक्ताः । कुतः ? सृष्टेरनादित्व संभवात् । पुनस्तुयावदहं ममेति चिन्तावर्तते तावत्प्रपञ्चविषयास्सर्वेऽपि सत्यवद्भासन्त एव । तथैव विदितं लोकरहस्यमेतदेवेति सर्वज्ञैर्महात्मभिर्महर्षिभिः । तथा चतैरिव पुनरस्माभिरेतेषां पारं गन्तव्यमिति सिद्ध्यति । एतदर्थं सकरुणं प्रकाशन्ते वैदिकादयस्सर्वेऽपि मार्गालोके । तत्वतस्सर्वेऽपि अद्वैतामृतसमुद्रसङ्गमा स्सोपनद्यादयो महानद्य एव । एतदज्ञानेन वृथाकलहयुक्तमिदं जगत् । अनेन किमपि प्रयोजनं नास्त्येव । एतेनपुनर्दैवानुग्रहहेतुकं सविवेचन बुद्धिमद्दुर्लभतरं अत एवचोत्तमं मनुष्यजन्म निरर्थकं स्यात् । एत ज्जन्म वृथाकृतं चेत्पुनरपि किं जन्म स्यादिति केनवा ज्ञायते । तस्मादस्मिन्नेव जन्मनि सर्वैरस्माभि रद्वैतामृतपानाय यत्नः क्रमेण कर्तव्यः । तथाकृतश्चेत्सार्थकं स्यादेत ज्जन्म कस्स यत्न इति चेद्ब्रूमः । सर्वं खल्विदं ब्रह्मनेह नानास्ति किंचन । इति मनस्यद्वैतमास्थाय स्वशरीरादिकुटुम्बयोगक्षेमादिषु प्रारब्धानुरीत्या भवितव्यं भवत्विति तन्नानुचिन्त्य, शीतोष्ण सुखदुःखादिद्वन्द्वजालान्यपि कामादिदुर्गुण त्यागपूर्वेण संविषह्य, सामान्यत स्सर्वेषां जीवकारुण्यबुद्ध्या लोकोपकारं कुलधर्माऽविरोधेन च कृत्वा विशेषतस्स्वधर्मरीति हिंसाकार्यमपि अहिंसाधर्मत्वेनावश्यमङ्गीकृत्य, यस्माल्लोकस्य स्वस्यचापिवा परमोपकारः संभवति तस्मिन्नीश्वरांशोऽधिकं प्रकाशत इति मनसिचोत्तमभावनांकृत्वा,

सर्वैरस्माभिरवश्यमनन्य दूषणपुरस्सरं फलानपेक्षा पूर्वकंच स्वाचारधर्म-कर्माण्येव श्रद्धा भक्तिभ्यां स्वस्वदेवतार्पणपुद्ध्या भुवि कर्तव्यानि। नत्वन्यानि एष एव यत्नः। नान्यः। एवं प्रयतमान्पुरुषांस्तु रक्षत्येव सर्वेश्वरः सङ्कट-कालेष्वपि। किंचानेनैव यत्नेन समस्तदुरितक्षयद्वारा चित्तशुद्धिश्च जायते। तदनन्तरमेवास्माकं ईश्वरानुग्रहेण गुरु कृपाकटाक्षेण च मूलाज्ञान निकृन्त-नैक परा मोक्षैक साधनीभूता च परा संविदुज्जृंभते। एतस्मिन्नेवहिकाले सच्चिदनन्तानन्दपरब्रह्मरूपास्स्मो वयं। तथा चैवं विधपरमलाभकरयत्न-सिद्ध्यर्थं बुद्धिनैर्मल्यंत्ववश्यं अस्माभिस्संपादनीयं हि। तदुद्दिश्य मया भक्त्यैव पुनरीश्वराज्ञयाच इयं भावि श्रीसूचिका स्वधर्मबोधिनीनाम ग्रन्थ-माला काऽपि तत्वदर्शिन्याख्य द्रविडतात्पर्ययुक्ता लोकेऽद्य विज्ञापिता। कर्मणैतेन महान् उपकारः कृतइति कृतार्थमात्मानं मन्ये। सकलङ्कश्चन्द्र-शिरोभूषणतया भगवता सर्वेश्वरेण स्वीकृतः खलु। स्वीकृत्य च भगवा-न्नन्दतिकिल। तद्वत्सर्वेशरूपोऽयं लोकोप्ये तत्स्वीकृत्य ब्रह्मानन्दं प्राप्नोत्ये-वेति च मन्ये। तदर्थं ध्यायामि सदा सर्वेशं इति शं, किंच

अस्मिन्ग्रन्थे प्रायशश्श्लोकानां मध्ये "इति" पदानन्तरं "ज्ञानमि"ति पदं संयोजनीयं। अन्यच्च, ज्ञानं द्विविधं परोक्षञ्चापरोक्षञ्च। अपरोक्षं तु स्वरूपज्ञानं। तदनुभूतिविषयं। परोक्षं पुनर्गुण ज्ञानं, मनोवृत्तिभूतं, तद्वारा बाह्यकर्मोपयोगिच भवति। क्रमेणापरोक्षज्ञानसाधनं च भवति। तथा च तस्य कर्तव्यतातु,

न कार्यं ब्रह्मविज्ञानं निर्मल स्वस्वरूपतः।<br>
वृत्ति ज्ञानं तु कार्यंस्यादन्तः करणधर्मतः॥

इति वचनात् औपचारेण सिद्ध्यत्येव। तस्मात् इति ज्ञानं स्वधर्मा चरणं विदुः, इति वाक्यं समञ्जसमेव, किंच

यद्यपि संस्कृतभाषाभिज्ञैः स्सर्वैरिह ◡ इत्ये तदर्ध चन्द्रांकित श्लोका-नां मदीय द्रविडतात्पर्यं तु दुर्वादिविषदन्तोत्पाटन करणादवश्यं अवलोक-नीयं भाषान्तरकरणीयंच तथाच पूर्णत्वं सिद्ध्यति इति शं॥

विनीतोहं श्रीदक्षिणामूर्ति शास्त्री,<br>
श्रीप्रत्यङ्मङ्गळ ग्रामवासी.<br>
(மேல்மங்கலம் கிராமம்)<br>
மதுரை ஜில்லா.

Dekshinamoorthy Sastry,<br>
*Melmangalam Gramam.*<br>
Madura Dt.

ॐ श्रीः

श्री जगदाचार्य प्रार्थनाच

ॐ गङ्गणपतये नमः श्रीपरमगुरुभ्यो नमः



ॐ नमश्श्रीब्रह्मविद्यायै ॥

---

श्रीमच्छृंगगिरिस्थास्ते शारदापीठ संस्थिताः ।
जयन्ति नितरां लोके जगदाचार्य शेखराः ॥ ॥ १ ॥

चन्द्रशेखरनाम्नावै चन्द्रमौळीशपूजया ।
लोकेख्यातिंगतास्तेतु भारतीबिरुदांकिताः ॥ ॥ २ ॥

स एवभात्यभिनवविद्यातीर्थ स्वरूपवान् ।
दक्षिणामूर्तिवल्लोके गुरुशिष्य स्वरूपतः ॥ ॥ ३ ॥

श्रीकामकोटिपीठस्थ जगदाचार्य शेखराः ।
कामाक्षी शप्रसादेन ह्यज्ञानध्वान्तभास्कराः ॥ ॥ ४ ॥

लोकाचार्यास्तथासर्वे तत्रतत्र च संस्थिताः ।
स्वरूपध्यान संयुक्ताः प्रकाशन्ते सदा भुवि ॥ ॥ ५ ॥

ब्रह्मवाचक शब्दत्वाद्यथोंकारः परस्स्मृतः ।
ब्रह्मवाचकरूपत्वात्तथाचार्याः परश्शिवः ॥ ॥ ६ ॥

सर्वदेवस्वरूपाम्स्तान् पञ्चदेव प्रपूजकान् ।
स्वधर्मज्ञानसिद्धर्थं दीनोऽहं शरणं गतः ॥ ॥ ७ ॥
य

स्वधर्मबोधिनीनाम ग्रन्थमाला शिवाज्ञया ।
उक्तानेनेतिमां बुद्धा कुर्वन्त्ये वहिते दयां ॥ ॥ ८ ॥
व

स्वधर्मज्ञानदातृत्वमस्मै दत्वा जनान् भुवि ।
चोदयन्तु तथा कर्तुं इत्यहं प्रार्थयेचतान् ॥ ॥ ९ ॥

दृष्टो यस्तु मया भाग्यात्स एवाचार्यशेखराः ।
इति मत्वार्पिताह्येषातेषां श्रीचरणे शिवों ॥ ॥ १० ॥

ऋणाधिव्याधिनाशार्थं तथा दारिद्र्य शान्तये ।
मृति जन्मविनाशाय सत्सिद्धैचानतोऽस्मितान् ॥ ॥ ११ ॥
य

स्वाचार धर्मादिविशुद्धिहेतोर्लोके जनानां शुभसिद्धयेतान् ।
श्रीदक्षिणामूर्तिरहं प्रपद्ये चित्तं समर्प्यैव शिवात्मये चों ॥ १२ ॥

इहामुत्रसुखंवेति परवैराग्यतोऽपिवा ।
यद्धितं न मयाज्ञातं शरण्यान्तान्गतोऽस्म्यहं ॥ ॥ १३ ॥

इति गुरु प्रार्थना.

श्री दक्षिणामूर्ति शास्त्री.

ஸ்ரீ:



श्री पण्डितवर्याणां अनुमोदन पत्रिकाच, ब्रह्मश्री हालास्य वासिनां

## शिवरामकृष्ण शास्त्रिणां – अनुमोदन पत्रिका ॥

प्रत्यङ्मङ्गळ सद्ग्रामवास्तव्यः कोविदाग्रणीः ।
दक्षिणामूर्तिरकरोत्स्वीय धर्मप्रबोधिनीं ॥ ॥ १ ॥

तत्कृतिर्धर्मसारज्ञैरादर्तव्या सुबुद्धिभिः ।
दर्शनीया विबोद्धव्या विद्वद्भिरधिकं मुदा ॥ ॥ २ ॥

शिवरामकृष्ण शास्त्री मधुरावासीकृतिं सुमधुरां तां ।
अनुमोमुदीतिचांगिल सुपाठशाला सुदेशिकः प्रेम्णा ॥ ॥ ३ ॥

॥ इति ॥

तथैव तत्रवासिनां ब्रह्मश्री (तेतियूर्)

## सुब्रह्मण्य शास्त्रिणां – अनुमोदन पत्रिका च ॥

येयं स्वधर्मस्य बिबोधिनीसा दृष्टा मया सत्तम सन्मनोज्ञा ।
श्री दक्षिणामूर्ति कृतामिमां तां सद्बुद्धिमन्तः प्रविलोकयन्तु ॥ ॥ १ ॥

अस्यां तत्वान्यनेकान्यमल मतिमतां गोचराण्येव
सन्तिह्यस्यास्सन्दर्शनेन प्रविमलमतयो धर्मनिष्ठा भवेयुः ।
सुब्रह्मण्यस्य मेऽसौ कुतिरिह विततं हर्षमाराद्ददाति द्रष्टुश्चेयं
महान्तं सुकृतमपि कलौ सन्ददात्येव नूनं ॥ ॥ २ ॥

दक्षिणामूर्तिनामायमेकृति करो द्विजः ।
धार्मिको धनिको विद्वान्भूया च्छंभोरनुग्रहात् ॥
इत्यर्थये चन्द्रमौलिं सुब्रह्मण्य सुधीरहं ॥ ॥ ३ ॥

दक्षिणामूर्तिनामाद्यः दक्षिणामूर्तिरेवसः ।
अकरोदन्यथाकस्मात् स स्वधर्मविबोधिनीं ॥ ॥ ४ ॥

உ

ஸ்ரீ:

तत्रभवतां महतां पूज्यपादानां जगदाचार्याणां तथैव धर्माचार
तत्पराणां महनीयानां च

अनुग्रहीत पत्रिका ॥

Sri Kanchi Kama Koti Peetadhipathi

**Jagathguru Sri Sankaracharya Swamigal**

mutt Kumbakonam. No. 133.

From the manager camp office.

To பிரம்மஸ்ரீ. தக்ஷிணாமூர்த்தி சாஸ்திரிகள் அவர்கள்,
மேல்மங்கலம்,

Camp. திருவேடகம். Date. 16–8–1928.

அநேக நமஸ்காரம். தாங்கள் இயற்றிய ஸ்வதர்மபோதினீ என்னும் கிரந்தம் ஸ்ரீ மஹா சந்நிதானத்தில் தங்களால் படிக்கப்பட்டு சுருதமானதில் தங்களுடைய தர்மசிரத்தையைக் குறித்து ஸ்ரீ மஹாஸ்வாமிகள் அவர்கள் சந்தோஷிக்கிறார்கள். பாஷாவியாக்யானத்துடன் கூடிய இந்த க்ரந்தமானது தர்ம்மாவிருத்தமாகஇருப்பதால் இதை அவசியம் ப்ரசாரம் செய்து ஸ்ரீ சந்திரமௌளீசுவர கருணாபாத்ராளாய் ச்ரேயஸ்ஸை அடையவேண்டியது என்பதாய் ஸ்ரீ மஹா சந்நிதானத்தில் அனுக்ரஹமான விபரம் தெரிவிக்கலான காரியம்.

Despatched }
Aug 16-8-28. }

E. V. சாஸ்திரி,
Manager.

உ



ஸ்ரீ சிருங்ககிரியில் ப்ரஜோத்பத்தி ௵ வைகாசி ௴த்தில் அடுத்த பட்டத்திற்கு சிஷ்யபரிக்ரஹம், ஆச்ரமஸ்வீகாரம் எடுத்து வைத்தல், என்ற ஸ்ரீ மதுத்சவம் நடந்தகாலத்தில் ஸ்ரீ ஜகத்குரு மஹா சந்நிதானத்தில் என்னால் பக்தியுடன் இந்த கிரந்தம் படிக்கப் பட்டது. அந்த சமயம் கூடியிருந்த ப்ரம்மசபைபோன்ற மஹா சபையில் ஸ்ரீ மஹா சந்நிதானம் மிக கருணையுடன் கேட்டு சர்வே சானுக்ரஹம் பூர்ணமாய் இருக்கிறது. இவ்வுலகிற்கு அதிலும்வைதிகர்களுக்கு மிகமிக உபகாரமானது. ப்ரசாரப் படுத்தவேண்டியது தான். ஸ்ரீ சாரதா பரிபூர்ண அனுக்ரஹம் பண்ணுகிறாள் என்று இது விஷயமாய் எனக்கு அந்த சமயம் ஸ்ரீ மஹா சந்நிதானத்தின் அனுக்ரஹ வாக்கும் கிடைத்தது.

இதுபோல் அநேகம் பெரியோர்களும், சதாசாரசம்பன்னர்களும், பண்டிதர்களும், பார்த்து சீக்கிரம் ப்ரசாரப் படுத்தவேண்டுமென்று அப்போது அப்போது ஆக்ஞை இட்டார்கள். இது சமயம் ப்ராசாரம்செய் தாமதிக்காதே என்று மறுபடி இந்த ஈசுவரவருஷத்தில் திவ்யதர்சனத்தின் மூலம் உத்தரவு கிடைத்தது. ஆனதால் ஈசுவரவருஷத்தில் ஈசுவராக்ஞையை இதன் மூலம் தெரியப்படுத்துகிறேன்.

ஸ்ரீ தக்ஷிணாமூர்த்தி சாஸ்திரி.

---

ௐ உ ஸ்ரீ:

सत्यं वद धर्मं चर





( नान्यः पन्थाविद्यतेऽयनाय)

ओं श्री महागणपतये नमः ।

ओं श्री परमगुरुभ्यो नमः ।

ओं श्री ब्रह्मविद्यायै नमः ।

ओं श्रमश्श्रीगोब्रह्मधर्मरक्षकाय सनातनेशाय सर्वेश्वराय ॥

# ॥ शिवस्वरूपमखिलम् ॥

श्रीस्वधर्मबोधिनीनाम ग्रन्थमाला प्रारभ्यते ।

---

ओं गं प्रसन्नवदनं वन्दे श्रुत्यभिपूजितं ।
स्वधर्मज्ञान सिद्ध्यर्थं सर्वविघ्नोपशान्तये ॥ ॥ १ ॥

ओं योऽखिल स्सर्वहृदिस्थितस्सन् संप्रेरयत्यात्मविलासभूतान् ।
तंधीमहि ब्रह्मसुखानुभूति सिद्ध्यैतथाचारकृते वरेण्यं ॥ ॥ २ ॥

आदित्यमंबिकांविष्णुं गणनाथं महेश्वरं ।
वन्दे वाणीं तथा ब्रह्मनिष्ठान्स्वाचार तत्परान् ॥ ॥ ३ ॥*

अचिन्त्य महिमा यस्स शोभनप्रभवां भुवम् ।
सुब्राह्मणावतारेण स्वेच्छयाद्य करिष्यति ॥ ॥ ४ ॥*

मङ्गळानि महाबाहु स्सर्वेषां न स्सदैवसः ।
करोतु भगवान्लोके स्वस्वाचार प्रवर्तकः ॥ ॥ ५ ॥

ब्रह्मैकप्रापकेवेदे स्थातुं स्थापयितुं भुवि ।
यस्मिन्नस्तीश्वरस्याज्ञा सवै ब्राह्मण उच्यते ॥ ॥ ६ ॥

ब्रह्मण्येव स्थितिनियमतो यद्यपि ब्राह्मणात्रै
लोकास्सर्वेऽप्युचित करणादाह्वयन्ते स्वनाम्ना ।
तत्स्वाचारे भुविभवतियो ब्रह्मसंलीनचित्तः
सोवैकोवाभवतु भवति ब्रह्मनिष्ठैश्वपूज्यः ॥ ॥ ७ ॥

सर्वेशाज्ञावशादेव भाविश्रीसूचिकासुवः ।
स्वधर्मबोधिनीनाम ग्रन्थमाला मयोच्यते ॥ ॥ ८ ॥

क्वधर्मविषयापारज्ञानं क्वाहंचबालधीः ।
तथाऽपिदर्शनीयेयं हीश्वराज्ञा प्रदर्शनी ॥ ॥ ९ ॥

स्वधर्मोनामकस्स्याच्चेत् वच्मिकिंचिच्छिवाज्ञया ।
सर्वं ब्रह्मेति विज्ञानं स्वधर्मा चरणं विदुः ॥ ॥ १० ॥ *

ब्रह्मसत्यं जगन्मिथ्या तस्मादन्यन्नकिंचन ।
इति च ज्ञानमास्तिक्यं ,, ॥ ॥ ११ ॥

स्वाविद्याकल्पितं सर्वं स्वप्नवत्तन्नचान्यथा ।
इति प्रपंच विज्ञानं ... ॥ १२ ॥

ममाहमितियाचिन्ता सैवाविद्या भयंकरी ।
तद्दूरीकरणज्ञानं ... ॥ १३ ॥

त्रिगुणात्मकमायाया स्त्वंशभूता प्रकीर्तिता ।
साऽविद्येति च विज्ञानं ... ॥ १४ ॥

जगज्जीवेश्वरादीनां भेदानां त्वपिकल्पनं ।
मायैव सुकरोतीति ... ॥ १५ ॥

ननिरूपयितुं शक्या शोधनेनास्तियाकिल ।
सैवमायेति विज्ञानं ... ... ॥ १६ ॥

ब्रह्मसन्निधिमात्रेण ब्रह्मणीदं जगत्तया ।
कृतं स्वसहितं चेति ... ... ॥ १७ ॥

अग्नौदाहादिवद्वक्तुंनापि ब्रह्मणिशक्यते ।
भिन्नाभिन्न तयासेति ... ॥ १८ ॥

तदनिर्वचनीयेति ब्रह्मशक्तिरिहोच्यते ।
सा च श्रुति प्रसिद्धेति ... ॥ १९ ॥

घटनाशक्यकार्याणां घटनेतु पटीयसी ।
इत्ये तन्महिमज्ञानं ... ... ॥ २० ॥

बुद्धौ तिष्ठति यावत्तु ममचेत्यहमित्यपि ।
तावद्दैतमिति ज्ञानं ... ... ॥ २१ ॥
व

तदाकेख प्रतिबिंबवन्माया प्रतिबिंबितः ।
सर्वेशोऽस्तीति सध्येयः ... ॥ २२ ॥

जगत्कारण सर्वेशमहिमा ज्ञायते नहि ।
देवैरपीति विज्ञानं ... ... ॥ २३ ॥

तथाऽपिते प्रकाशन्ते देवाद्यात्मविभूतयः ।
नाविद्यैकवशाहीति ... ॥ २४ ॥

तद्वत्प्रकाशसिद्धर्थं स्वेस्वेमार्गे सुकल्पिते ।
य
लोकास्सन्तुतदेतीह ... ... ॥ २५ ॥

सर्वेषां सौख्यमुद्दिश्य सर्वलोकेश्वरः प्रभुः ।
सृष्टवान्मनुजाम्श्चेति ... ... ॥ २६ ॥

तद्देशकालरीत्याते मार्गान्प्रतिकल्पिताः ।
सर्वेशेनेति विज्ञानं ... ... ॥ २७ ॥

श्रुतिसंमतमार्गास्तु शीघ्रं ज्ञान प्रदा इति ।
अन्येकाल क्रमेणेति ... ... ॥ २८ ॥

श्रुतिसंमतमार्गाणां विलासार्थं च कल्पिता ।
एषा भरत भूश्चेति ... ॥ २९ ॥

तथा सर्वमतानांच तत्तद्भूमिस्तु कल्पिता ।
इत्येतद्विषय ज्ञानं ... ॥ ३० ॥

तस्मान्मतानि वर्धन्तां स्वपूर्णकलयासह ।
स्वस्वयोग्ये स्थले हीति ... ... ॥ ३१ ॥

मार्गोऽन्योन्य स्थले लोके ह्यविरोधेन वर्तताम् ।
एष हिन्याय एवेति ... ... ॥ ३२ ॥

तथाऽपि लोककार्येषु सुसमत्वेत वर्तताम् ।
लोकोऽयमिति च ज्ञानं ... ॥ ३३ ॥

ये कुर्वन्ति यदाक्षोभं श्रुतिसंमतवर्त्मनाम् ।
तेऽधोयान्ति तदैवेति ... ॥ ३४ ॥

श्रुतिसंमतमार्गा हि कथ्यन्ते चोत्तमा इति ।
इत्येतद्गौरवज्ञानं ॥ ३५ ॥

यो यत्करोति तत्कर्मफलं तेनैव भुज्यते ।
इहदेहान्तरेवेति ... ॥ ३६ ॥ *

पूर्ववासनयैवेह स्तन्यं पिबतिवैशिशुः ।
तज्जन्मान्तरमस्तीति ... ... ॥ ३७ ॥

सुखदुःखात्मकद्वन्द्वजालं तस्माद्विषह्य वै ।
कर्तव्यं स्वस्वकर्मेति ... ... ॥ ३८ ॥

तदन्यदूषणं त्याज्यं वयं सर्वे हि सोदराः ।
कर्तव्यं तु स्वकर्मेति ... ... ॥ ३९ ॥

स्वस्वधर्मोक्तहिंसाऽपि कर्तव्या सा न दूषिता ।
सात्वहिंसेति विज्ञानं ... ... ॥ ४० ॥ *

स्वाचाररक्षणार्थं वै प्राणंवाऽपि परित्यजेत् ।
कुलधर्मानुरीत्येति ... ... ॥ ४१ ॥ *

अन्याकर्षणयत्नस्तु स्वमार्गजनवृद्धये ।
कोपहेतुरितीशस्य ... ... ॥ ४२ ॥

स्वपूर्वमतभक्त्यैव चाऽऽगन्तुं शुद्धिकर्मणा ।
योग्योह्यन्यगतोऽपीति ... ... ॥ ४३ ॥

सत्यतिक्रमणे काले वासस्तस्येहतूत्तमः ।
एकान्ते योगिवच्चेति ... ... ॥ ४४ ॥

अतिक्रमेऽस्य धर्मस्यक्षोभः खलुभवेदिह ।
मतानांच तथाऽस्येति ... ... ॥ ४५ ॥

जात्याचारकुलाचारदूषकाणां तु सर्वथा ।
गतिर्नास्तीति च ज्ञानं ... ... ॥ ४६ ॥

मार्गक्रमेण सर्वेऽपि जायन्ते पुण्यभूमिषु ।
श्रुतेर्मार्ग इति ज्ञानं ... ... ॥ ४७ ॥

त्रिकालस्थमतानांच सर्वेषां वै श्रुतिः खलु ।
प्रमाणमिति विज्ञानं ... ... ॥ ४८ ॥

सर्वलोकस्य सृष्टादौ लोकार्थं ह्यागता च सा ।
तस्माद्धै मूलभूतेति ... ... ॥ ४९ ॥

महद्भिस्स्वीक्रियन्ते च तत्तन्मार्गाः श्रुतेरिह ।
तत्तत्कालादिरीत्येति ... ... ॥ ५० ॥

तदनन्ता श्रुतिश्चेति लोके ख्यातिंच सा गता ।
इत्येतन्महिमज्ञानं ... ... ॥ ५१ ॥

शब्दब्रह्ममयीत्वीशमुखात्साह्यागता किल
तस्मादपौरुषेयेति ... ... ॥ ५२ ॥

सा तु पूज्या श्रुतिर्लोके सर्वेषां मातृवत्स्थिता ।
इत्येतद्गौरवज्ञानं ... ... ॥ ५३ ॥

तच्छ्रुत्यादि प्रवचने लोके विप्रः प्रतिष्ठितः ।
द्विजसामान्यतोऽपीति ... ... ॥ ५४ ॥*

तत्तद्योग्यैकनिष्टंचेत्फलवद्वद्भिमद्भवेत् ।
तत्तत्कर्मेति च ज्ञानं ... ... ॥ ५५ ॥

धर्मकामार्थ मोक्षाणां सिद्धये लोक वृद्धये ।
विप्रः प्रतिष्ठित श्चेति ... ... ॥ ५६ ॥

सर्वकारण कर्तुश्च मुखभूतो हि सद्विजः ।
तस्मात्तदधिकारीति ... ... ॥ ५७ ॥

मतप्रवर्तकैस्तस्मात्स्वस्व प्रवचनं कृतं ।
स्वस्वभाषानुरीत्येति ... ... ॥ ५८ ॥

लोका गुणमयास्सर्वे गुण कर्मविभागशः ।
आसृष्टेः कल्पिताश्चेति ... ... ॥ ५९ ॥*

न हन्यते यथानागोस्वविषेण तथा भुवि ।
स्वकर्मणानरश्चेति ... ॥ ६० ॥

रागद्वेषौ पुरस्कृत्य प्रकृतिः कुरुतेवशं ।
त्याज्यौतौतत्सदैवेति ... ॥ ६१ ॥

मृद्भक्षणेन हि यथा शोधकोवैनहन्यते ।
ज्ञानीकर्मभिरेवेति ... ॥ ६२ ॥

यथा नानाविधा भेदाः पक्षि वृक्ष मृगेष्वपि ।
जनवर्गे तथैवेति ... ॥ ६३ ॥

श्रेष्ठत्वं च मनुष्याणां प्रज्ञया खलु निर्मितं ।
भेदस्तदनुरीत्येति ... ॥ ६४ ॥

यन्त्रदीपो यथा बल्बुभेदान्नानातथेतिवै ।
रक्तसूक्ष्मभिदा प्रज्ञा ... ॥ ६५ ॥

एकजातौ च वृक्षस्य मृगस्य च यथा बहु ।
तथाह्येकमतेऽपीति ... ॥ ६६ ॥

यथा ताम्रादिशुद्ध्यर्थं तिन्त्रिण्याद्युपयुज्यते ।
तथेत्याचारभेदोऽपि ... ॥ ६७ ॥

तत्तद्रस पदार्थश्च क्षिप्यते स्वस्व योग्यके ।
पात्रे हि गुणरीत्येति ... ॥ ६८ ॥

क्रियते हि कुटुंबादौ कार्यं स्वस्वोचितं तथा ।
क्रियतां स्वस्वकर्मेति ... ॥ ६९ ॥

यथेन्द्रियेण यन्त्रेण स्वकार्यं क्रियते तथा ।
क्रियतां च नरेणेति ... ॥ ७० ॥

तत्स्वकर्मोत्तमंचेति कर्तव्यं वृद्धिकांक्षिभिः ।
अनपेक्ष्यफलंचेति ... ॥ ७१ ॥

विगुणान्यपि कर्माणि स्वानिकृत्वेहमानवः ।
उत्कृष्टफलमेतीति ... ॥ ७२ ॥

वयं सर्वेसमरसास्तथापीशेन निर्मिताः ।
शैलूषपात्रवच्चेति ... ॥ ७३ ॥

स्वधर्मनिरतानेव सर्वदा रक्षति प्रभुः ।
अन्यान्काल क्रमेणेति ... ॥ ७४ ॥

कृतशब्दो यथाखेऽस्ति यन्त्रान्निश्चीयते हि सः ।
धर्माधर्मौ तथैवेति ... ॥ ७५ ॥

दुर्वर्त्मनि यदा लोकास्सन्ति तत्तत्प्रवर्तकाः ।
तद्देहावतरन्तीति ... ॥ ७६ ॥

कालदेशानुरीत्याते जनान्शास्त्रानु सारतः ।
सन्मार्गे स्थापयन्तीति ... ॥ ७७ ॥

द्वैतवर्त्मन्यभि प्रायस्तेषां खलु न विद्यते ।
इत्येतद्विषयज्ञानं ... ॥ ७८ ॥

तथाऽपि लोकशिक्षार्थं लोकेऽस्मिन्तु स्ववर्त्मनि ।
तेबभूवुरितिज्ञानं ... ॥ ७९ ॥

मनस्य द्वैतमास्थाय कर्मकृत्वानिजं पुमान् ।
ज्ञानस्य पदमेतीति ... ॥ ८० ॥

शास्त्रेष्वितरमार्गाणां दूषणं नैव दूषणं ।
इति या मन्यते धीस्तां ... ॥ ८१ ॥

सुवस्तुनिन्दनामात्ता यथा स्वबाल वृद्धये ।
क्रियते तैस्तथाचेति ... ... ॥ ८२ ॥

स्वजनानां स्वमार्गेषु श्रद्धा भक्त्यभि वृद्धये ।
मार्गोऽन्यो दूषितश्चेति ... ... ॥ ८३ ॥*

रहस्यमेतदज्ञात्वा वृथा वादं करोति वै ।
लोकोऽयमिति च ज्ञानं ... ... ॥ ८४ ॥

मत जाति कुलापेक्षा ज्ञानस्य न हि विद्यते ।
हृच्छुद्धेरस्त्यपेक्षेति ... ... ॥ ८५ ॥

लोके स्वाचारशून्यस्य तथैवान्यावलंबिनः ।
चित्तशुद्धिर्नचैवेति ... ... ॥ ८६ ॥

तस्माद्यस्य य आचारो धर्मो यश्चापि या क्रिया ।
स्थातव्यं तत्रतेनेति ... ... ॥ ८७ ॥

सु संगाहार विद्याभि श्चित्तशुद्धिर्दृढीभवेत् ।
अन्यथा सा न चैवेति ... ... ॥ ८८ ॥

आहारमनुसृत्यैत्र बुद्धिर्गच्छति सत्पथं ।
गुणवृद्धिस्तथैवेति ... ... ॥ ८९ ॥

दुर्भोजनदुरालाप दुस्संगेभ्यश्च रक्ष्यतां ।
देहस्तस्मात्सदैवेति ... ... ॥ ९० ॥

धनधान्यार्जनंचापि कर्तव्यं ह्यापदं विना ।
लोके स्वाचाररीत्येति ... ... ॥ ९१ ॥

वस्त्रं तैलं तथापिष्टं धान्य तण्डुलमेवच ।
शुद्धं पाणि भवं चेति ... ... ॥ ९२ ॥*

जाड्यं खलु प्रयच्छन्ति यन्त्रोत्पन्नानितानिचेत् ।
जडाधिकवशाच्चेति ... ॥ ९३ ॥

जीवसत्वं हि तेषां च यन्त्रै र्निष्पीड्यते भुवि ।
इत्येतद्विषयज्ञानं ... ॥ ९४ ॥

तत्सर्वनाशको यन्त्र समूहस्तन्त्र वर्धितः ।
लोकार्थं नाश्यतांचेति ... ॥ ९५ ॥

चित्तबुद्धिशरीराणां पुष्टिशुद्धिकराविति ।
आहारसहवासौद्धौ ... ॥ ९६ ॥*

सतांनिकटवासे च सदाहारस्य भोजने ।
मतिस्तुभाग्यलभ्येति ... ॥ ९७ ॥

यथा दीपप्रकाशस्य स्नेहवर्ती च कारणे ।
उभावपि तथैवेति ... ॥ ९८ ॥

यथा समुद्रतरणे ह्युपकारं करोतिनौः ।
सतां संगस्तथैवेति ... ॥ ९९ ॥

जलसक्तो यथा दीपोनाशमायाति वै भुवि ।
असत्संगी तथैवेति ... ॥ १०० ॥

तरणे तु यथा ह्यब्धेर्नशक्तो न क्रमध्यगः ।
असत्संगी तथैवेति ... ॥ १०१ ॥

लोके यद्यस्तिनरकोह्यसतां संग एव वै ।
अन्यः कोऽपिनचैवेति ... ॥ १०२ ॥

स्वर्गोयद्यस्ति लोकेऽस्मिन्सतां संगस्तथैवहि ।
अन्यः कोऽपि न चैवेति ... ॥ १०३ ॥

तद्देहं नित्यवन्मत्वाह्यर्थविद्या सुसंगमाः ।
संपाद्यन्तां स्वरीत्येति ... ॥ १०४ ॥

तथाऽपि बुद्धुदं बुद्धादेहंतं क्रियतां भुवि ।
दानं धर्मस्सदैवेति ... ॥ १०५ ॥

अन्नस्य क्षुधितं पात्रं द्रव्यदाने तु योग्यता ।
दातव्यं हि तथाऽपीति ... ॥ १०६ ॥

नोचेदधोगतिंयाति ह्यदाता भुवि वै तथा ।
दुर्भोजनकरोपीति ... ॥ १०७ ॥

तच्चित्तशुद्धये ह्यन्नं परस्यत्यज्यते बुधैः ।
निन्द्य बुद्धा न चैवेति ... ॥ १०८ ॥

चित्तस्य शुद्धये ह्यन्नं अन्यजातेर्न गृह्यते ।
हीन बुद्धा न चैवेति ... ॥ १०९ ॥

स्वजाति जनमध्येऽपि यस्यान्नं नैवदूषितं ।
तद्भुज्यते बुधैश्चेति ... ॥ ११० ॥

तदन्नभोजनं चापि क्रियते साधुभिस्सह ।
न तु सर्वजनैश्चेति ... ॥ १११ ॥

सर्वदोषस्य नाशायह्युच्यते पङ्क्ति पावनः ।
भोजनादौ स्वरीत्येति ... ॥ ११२ ॥

यस्य यश्चगुणो लोके तस्यान्नस्य तु तद्गुणः ।
इत्यन्नमहिमज्ञानं ... ॥ ११३ ॥

तथैव पश्यतश्चापिह्यन्नं गृह्णाति वै गुणं ।
इत्यन्नमहिमज्ञानं ... ॥ ११४ ॥

प्रायशोदृष्टि मूलानि रोगादीनि भवन्ति हा ।
अनुभूतमिदंचेति ... ॥ ११५ ॥

गुणदोषावुभौ नित्यं दृष्टिद्वाराहिदेहिनां ।
बहिश्चरत एवेति ... ॥ ११६ ॥

अन्नं ब्रह्मात्मना भाव्यं तस्मादन्नं न दूषयेत् ।
नोचेद्धानि प्रदंचेति ... ॥ ११७ ॥

अन्नशक्त्यनभिज्ञैस्तु वृथावादश्च भोजनं ।
क्रियते भुविचैवेति ... ॥ ११८ ॥

तदन्नभोजनं तस्य साधनं संग एव च ।
कर्तव्यं धर्मरीत्येति ... ॥ ११९ ॥

स्वस्वदेव प्रसादेन तदैव भुवि कीर्तिमान् ।
क्रमेणेत्युन्नतिंयाति ... ॥ १२० ॥

बालानामक्षराभ्यास स्तदैवेहतु शुद्धिदः ।
नोचेत्कुमार्गदोहीति ... ॥ १२१ ॥

स्वान्याचारचरित्रादि संग्रहो बालकान्प्रति ।
स्वभाषयेति कर्तव्यः ... ॥ १२२ ॥

राजनीतिभिषक्ज्योतिर्गणितानां च संग्रहः ।
तथैवेति च कर्तव्यः ... ॥ १२३ ॥

शरीरदार्ढ्यमुद्दिश्य व्यायामश्च गुणैस्सह ।
बाल्यादारभ्यतांचेति ... ॥ १२४ ॥

सर्वकारण पूज्या च मातृभाषाऽपि संस्कृता ।
बाल्यादारभ्यतांचेति ... ॥ १२५ ॥

स्वकुलाचारविद्याच भोगमोक्षप्रदायिनी ।
बोधनीया स्वरीत्येति ... ॥ १२६ ॥

संभाषणाय सर्वैश्च गौडभाषाऽपि वत्सरे ।
द्वादशेऽभ्यस्यतांचेति ... ॥ १२७ ॥

राजकीयकलाचापि तत्तन्नीति प्रबोधिनी ।
द्वादशेऽभ्यस्यतांचेति ... ॥ १२८ ॥

तत्तत्कुलो चितश्चैव शिल्पाभ्यासो महाशयाः ।
तथैवारभ्यतांचेति ... ॥ १२९ ॥

रुचिभिन्नतया शक्तिः पत्रे फलरसेऽस्ति हि ।
तथेति सर्वरक्तेऽपि ... ॥ १३० ॥

तथाऽपीतरमर्यादाज्ञानहेतोश्चता अपि ।
स्वरीत्यैवेति पठ्यन्तां ... ॥ १३१ ॥

श्रुतिस्स्मृतिस्तथाचारः प्रवृत्ता विह सर्वदा ।
मूलं तथा न चान्येति ... ॥ १३२ ॥

कर्माचारचरित्राणां शास्त्रादिस्थ विरोधिता ।
युगकल्पनिमित्तेति ... ॥ १३३ ॥

अंगांगिनोर्विरोधेतु स्वीकर्तव्यां गिनश्चवै ।
रीति स्सर्वैरिहेतिस्म ... ॥ १३४ ॥*

किंच शास्त्राद्यभि प्रायोह्यद्वैतज्ञान एव वै ।
अन्यस्मिन्नेति विज्ञानं ... ॥ १३५ ॥

विद्याभ्यासश्च कर्तव्यो भक्त्या तत्तद्गुरोः किल ।
नोचेद्धानि प्रदश्चेति ... ॥ १३६ ॥

तत्तत्कला विद्वृद्ध्यर्थं तत्तच्छाला तु वै भुवि ।
तत्तद्रीत्येति कर्तव्यः ... ॥ १३७ ॥

कृषिबाणिज्य कर्माणि लोकेयानी तराणि च ।
तत आरभ्यतांचेति ... ॥ १३८ ॥

लौकिकज्ञानहेतोश्च भुवि वृद्ध्यै स्वसहाटनं ।
कर्तव्यं स्वस्वरीत्येति ... ॥ १६९ ॥

विद्याविषयशून्यैर्भूस्सर्वशून्या कृतायदि ।
हा कलिः क्रीडतेऽद्येति ... ॥ १४० ॥

सिद्धिः पूर्वोक्त विद्यानां अभ्यासस्यापि वै भुवि ।
विवाहानन्तरं नेति ... ॥ १४१ ॥

कल्प्यतां ब्रह्मचर्यं तद्बालानां स्वस्ववर्त्मना ।
अष्टमादिष्विति ज्ञानं ... ॥ १४२ ॥

लोकश्चानन्तरं बालान्तत्तद्योग्यं गुरुं प्रति ।
नयेद्रीत्येति च ज्ञानं ... ॥ १४३ ॥

गुरुभक्त्यैव तैश्चापि ब्रह्मचर्यं तु रक्ष्यतां ।
आचतुर्विंशतेश्चेति ... ॥ १४४ ॥

शीलौदार्यादि वृद्ध्यर्थं स्वस्यापि स्वकसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १४५ ॥

बुद्धि वृद्धिं समुद्दिश्य स्वस्यापि स्वकसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १४६ ॥

विद्या प्रसाद मुद्दिश्य स्वस्यापि स्वकसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १४७ ॥

गुरु प्रसादमुद्दिश्य स्वस्यापि निजसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १४८ ॥

मनोबल विवृद्ध्यर्थं स्वस्यापि निजसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १४९ ॥

शरीरबलमुद्दिश्य स्वस्यापि निजसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १५० ॥

सौन्दर्यादि विवृद्ध्यर्थं स्वस्यापि निजसन्ततेः ।
रक्षणीयं हि तच्चेति ... ॥ १५१ ॥

यावद्वै ब्रह्मचर्यं तु रक्ष्यते भुविमानवैः ।
तावद्भूश्शोभतेचेति ... ॥ १५२ ॥

रक्षिते ब्रह्मचर्ये तु ब्रह्मज्ञानं हि संभवेत् ।
इत्येतन्महिम ज्ञानं ... ॥ १५३ ॥

वर्तनं स्त्रीसमीपे तु कदापीह न युज्यते ।
यूनामिति च विज्ञानं ... ॥ १५४ ॥

प्रोक्तास्त्रीह्यग्निरूपेति घृतरूपस्तथा पुमान् ।
इत्ये तद्विषयज्ञानं ... ॥ १५५ ॥

किंविस्तरेण पुत्रस्य मात्रानैवापि युज्यते ।
एकासनेन वार्तेति ... ॥ १५६ ॥

दुर्जयस्त्विन्द्रिय ग्रामः पण्डितं चापिकर्षति ।
तुच्छेविषय एवेति ... ॥ १५७ ॥

विवाहोपीह संपूर्ण विद्याविनय संपदाम् ।
बालानांत्विति कर्तव्यः ... ॥ १५८ ॥

सर्वैरपि विधिप्रोक्त शिखा पुण्ड्रादि लक्षणं ।
न त्याज्यं सर्वथैवेति ... ॥ १५९ ॥

स्वस्वाचारानुरोधेन स्वस्त्री संगः कृतोहिचेत् ।
ब्रह्मचर्यं हि सोऽपीति ... ॥ १६० ॥

वर्त्मनैतेन लोकेऽस्मिन्प्रजावृद्धिश्च जायतां ।
तस्माद्भूश्शोभतेचेति ... ॥ १६१ ॥

दृढ संतानवृद्धेस्तु स्त्रीवयोनैव कारणं ।
किन्त्वनर्थस्य तच्चेति ... ॥ १६२ ॥

पाषण्डेतन्मतेऽज्ञानां बुद्धिर्नोत्पद्यतामिह ।
ध्यायामीशं सदैवेति ... ॥ १६३ ॥

दृढ संतानवृद्धेस्तु ब्रह्मचर्यं हि कारणं ।
अन्यन्नाशकरंचेति ... ॥ १६४ ॥*

दृष्टि संकोचलज्जादिरनूढायाः कथं भवेत् ।
ऋतुमत्यास्त्रियाश्चेति ... ॥ १६५ ॥

दृष्टेः पूर्ण निपातं तु स्त्रियोधीरत्वनाशकं ।
वरस्येति च विज्ञानं ... ॥ १६६ ॥

स्वभर्तरिमनोलीनं अनूढायाः कथं भवेत् ।
ऋतुकाले स्त्रियाश्चेति ... ॥ १६७ ॥

ऋतुमत्या विवाहस्तन्नयुक्त श्श्रुति वर्त्मनां ।
विशेषेणेति विप्राणां ... ॥ १६८ ॥*

पूर्वापरविचारेण मन्त्रार्थे तु कृते सति ।
स निन्द्य स्सर्वदैवेति ... ॥ १६९ ॥

ऋतु मत्यर्थ लिङ्गानां मन्त्राणां न प्रमाणता ।
नोचेद्दानि प्रदश्चेति ... ॥ १७० ॥

भाविकल्याणमुद्दिश्य पठिताहीति ते खलु ।
मध्येकन्यार्थ मन्त्राणां ... ॥ १७१ ॥

अचिन्त्य महिमामन्त्र शक्तिस्सा काल आगते ।
फलत्येवेति बालानां ... ॥ १७२ ॥*

नृमेधादीनि कर्माणि त्याज्यानीह यथा कलौ ।
तथेति तद्विवाहश्च ... ॥ १७३ ॥

ऋतुकाले स्त्रियालोके ह्यवश्यः पतिसंगमः ।
वदत्येवं श्रुतिश्चेति ... ॥ १७४ ॥

शून्येमासि स्त्रियोलोके प्रथमार्तव संभवे ।
उद्वाहश्च कथंचेति ... ॥ १७५ ॥*

गतेयुग सहस्रेऽपि कृतो बाल्यविवाहकः ।
सर्वैरेव जनैश्चेति ... ॥ १७६ ॥

धर्मे स्मृत्य विरोधेन पुराणचरितं मतं ।
अन्यथा तत्पृथक्चेति ... ॥ १७७ ॥

स विवाहः खलु स्त्रीणां सुखप्रसवकारकः ।
दुःखदोऽन्य इति ज्ञानं ... ॥ १७८ ॥

कृष्टा भूमिर्यथा नष्टा बीजानवपनेन तु ।
तथा पुष्पवतीसेति ... ॥ १७९ ॥

संमतासंमतौ मार्गौ श्रुत्यायद्यपिदर्शितौ ।
संमतस्त्वति कर्तव्यः ... ॥ १८० ॥*

संमतासंमतज्ञास्ते कल्पकारादयो भुवि ।
न वयं हीति विज्ञानं ... ॥ १८१ ॥

मन्त्रद्रष्टा ऋषिः प्रोक्तो तस्मात्तेऋषयः खलु ।
गोत्रनिर्मातरश्चेति ... ॥ १८२ ॥

त्रिकालस्थ शरीरादिरीतिज्ञा भुवि ते खलु ।
तद्धर्मरक्षकाश्चेति ... ॥ १८३ ॥

तस्माद्बाल्य विवाहस्तु स्त्रीणां कर्तव्य एव वै ।
पतिभक्ति प्रदोहीति ... ॥ १८४ ॥

तथैव सर्वकर्माणि तदुक्तेनैव वर्त्मना ।
कर्तव्यानीति विज्ञानं ... ॥ १८५ ॥

वरार्थंवाऽपि वध्वर्थं न्याय्यमन्वेषणं भुवि ।
पित्रादीनामितिज्ञानं ... ॥ १८६ ॥*

वध्वर्थंवा वरार्थंवा शुल्केन स्वीकृतं धनं ।
कुलक्षयकरंचेति ... ॥ १८७ ॥

पितुस्स्वस्य च सोदर्याः कन्यानां दूषितः किल ।
विवाहो लोकरीत्येति ... ॥ १८८ ॥

वादस्तथा विवाहश्च तुल्यस्स्याच्चेदि होत्तमः ।
दारिद्र्यान्न्यूनतानेति ... ॥ १८९ ॥

वैराग्यं जायते पुंसां यदा वै लोक आश्रमः ।
श्लाघ्यः कुलानुरीत्येति ... ॥ १९० ॥

जाति संकरकार्यस्तु तत्तद्धर्मस्य नाशकः ।
तस्मान्माभूदिहेतिस्म ... ॥ १९१ ॥

तत्पत्नी तु तदा लोके बुद्धिं न विषये नयेत् ।
धन्यासाहि सतीचेति ... ॥ १९२ ॥

स्त्रीणां पुनर्विवाहस्तु पापस्सर्वत्र सर्वदा ।
सर्वनाशकरोहीति ... ॥ १९३ ॥

बहुळस्त्री प्रजासर्गे तुच्छाऽविद्या पटीयसी ।
तन्माभूदिति निन्द्यस्सः ... ॥ १९४ ॥*

सर्वनाशकरात्तस्माद्भर्त्रानुगमनं भुवि ।
तासां पुण्यं वरं चेति ... ॥ १९५ ॥*

प्रायशोऽपेक्ष्यते लोकैः स्वसुखं वासनाबलात् ।
स्त्रीत्व वृद्धिकरं हेति ... ॥ १९६ ॥

पश्वादि जन्नसिद्धं तत्किंतेनात्र प्रयोजनं
नोचेद्भेदस्तुकोऽस्तीति ... ॥ १९७ ॥

पत्युस्तुहीनता तासां पूर्वकर्मविपाकजा ।
इत्युदासीनताज्ञानं ... ॥ १९८ ॥

नोचेदेवं हि लोकेऽस्मिन्पातयन्तिचताः पुनः ।
तेऽपीत्यधोगतिं यान्ति ... ॥ १९९ ॥

शरीरेन्द्रिय सौख्यस्य मुख्यत्वेनेहवादिनः ।
बध्यन्ते खल्विति प्रश्नैः ... ॥ २०० ॥

पत्यौ सत्यपिकासांचिज्जायते किल दुर्मतिः ।
संमतावेति सा लोके ... ॥ २०१ ॥

अन्यस्त्री संगमश्चापि केषांचि ज्ञायते किल ।
स लोके संमतोवेति ... ॥ २०२ ॥

तत्सुखेसति मुख्यत्वे किमर्थमिति कल्प्यते ।
वयोनिबन्धनं तासां ... ... ॥ २०३ ॥*

वृथावादेन पापेन कर्मणावेति तै रिह ।
हा वृथा क्रियते कालः ... ... ॥ २०४ ॥

प्रजोत्पादन धर्मश्च पुंसां विषय एव वै ।
स्त्रीणां तु न तथाचेति .... ॥ २०५ ॥

पति हीनास्स्त्रिय स्तस्माद्वैराग्येण नयन्त्विह ।
कालं स्वाचाररीत्येति .... ॥ २०६ ॥

स्वातन्त्र्यं च तथा त्याज्यं स्त्रीणां वह्नी स्वभावतः ।
अविद्यैक वशाहीति ... ... ॥ २०७ ॥

निजे तमोगुणेऽविद्या विद्वांसमपि कर्षति ।
स्त्रीणां किमिति वक्तव्यं ... ॥ २०८ ॥

तदवस्थासु सर्वासु स्त्रीसमूहेन पोषके ।
स्थातव्यं च वशेनेति ... ... ॥ २०९ ॥

तथाऽपीह कुटुम्बादिपोषणे पुरुषैरपि ।
स्थातव्यं तन्मतेनेति ... ॥ २१० ॥

स्वातन्त्र्यमेतदेवेह लोकवृद्धिकरं परम् ।
स्त्रीणामन्यन्नचैवेति ... ॥ २११ ॥

स्वभर्तृवशगानारी पञ्चभूतात्मकं जगत् ।
स्ववशं च करोतीति ... ॥ २१२ ॥

श्रीरामजानकी तुल्यास्तस्मात्सर्वमतस्थिताः ।
वर्धन्तां चेति विज्ञानं ... ॥ २१३ ॥

अरुन्धत्यादि तुल्यानां स्त्रीणां सत्वान्मतानिच ।
जीवन्त्यद्यापिचेतीह ... ... ॥ २१४ ॥

किञ्चये चित्तशुध्यर्थं धर्मरूपाश्च सन्तिते ।
ज्ञापयन्तामिहेतिस्म ... ... ॥ २१५ ॥

यस्माज्जीवात्तु जीवानां उपकारोऽधिकोभवेत् ।
तस्येशत्वं वदन्तीति ... ... ॥ २१६ ॥

चरं वाऽप्यचरं वाऽपि लोके तस्मात्सुपोष्यताम् ।
गोमाता हि तथैवेति ... ... ॥ २१७ ॥*

बालसस्यादि वृद्धीनां कारणाद्वा नहिंस्यताम् ।
सा किंतु पूजनीयेति ... ... ॥ २१८ ॥

किंच श्रौतादिकार्यं तु बहिर्वृत्या यदा भवेत् ।
तदेत्यवश्यं वाद्यं च ... ... ॥ २१९ ॥

गानमङ्गलवाद्यादिनादः प्रोत्साहदस्तदा ।
नोचेद्विघ्नप्रदोहीति ... ... ॥ २२० ॥

त्यक्त्वा तस्मिन् स्वनिष्टां तत्प्रोत्साहं चाऽपि योगिनः ।
कारयन्ति जनांश्चेति ... ... ॥ २२१ ॥

वर्त्मनैतेन लोकेऽस्मिन् कर्तव्यं चान्यमार्गजैः ।
तस्मिन् धीसहनं हीति ... ... ॥ २२२ ॥

किञ्चान्योन्य विरोधेन ह्यालयादि प्रभेदनम् ।
न कार्यं सर्वथैवेति ... ... ॥ २२३ ॥

समुल्लङ्घ्य तु मर्यादां कृतं चेदिहतत्पुनः ।
स पापी दण्ड्य एवेति ... ... ॥ २२४ ॥

तत्तन्मतस्थरीत्या तु ह्येक एव प्रसीदति ।
प्रश्नैवं जायतां चेति ... ... ॥ २२५ ॥

एकमेव हि पानीयं बहुनाम्ना किलोच्यते ।
एवमीश इति ज्ञानं ... ... ॥ २२६ ॥

स्वर्णं तु भूषणत्वेन यथा नानाविधं भुवि ।
मार्गरीत्या तथेतीशः ... ... ॥ २२७ ॥

भूषणानि यथा स्वर्णत्वेनैकः सर्वदेवताः ।
ईशत्वेन तथैवेति ... ... ॥ २२८ ॥

क्रियते दूषणं लोके विग्रहाराधनस्य च ।
तत्सर्वहानिदं हीति ... ... ॥ २२९ ॥

वस्त्वाकारेण केनापि सर्वेषां खलु देहिनाम् ।
मनस्तु वर्तते चेति ... ... ॥ २३० ॥

तन्मनो नाशमुद्दिश्य तद्रीत्यैवेह तु श्रुतिः ।
प्रतीकमवदच्चेति ... ... ॥ २३१ ॥

श्रुतौ तद्दूषणं वाक्यं अन्तर्वृत्तिमतां किल ।
बाह्यवृतिमतांनेति ... ... ॥ २३२ ॥

स्वस्वरीत्या च मनसा सर्वे विग्रह पूजकाः ।
तत्तन्नपेशलं चेति ... ... ॥ २३३ ॥*

मिथ्या प्रकल्पितं चापि स्वानुभूतिप्रदं हितत् ।
विग्रहाराधनं चेति ... ... ॥ २३४ ॥

स्वप्नदृष्टपदार्थस्तु जाग्रद्भोगस्य सूचकः ।
स्यात्किलेति च तद्वत्तत् ... ... ॥ २३५ ॥

मिथ्यादेहसहायेन यथा सत्यं निजं पदम् ।
लभ्यतेहि तथैवेति ... ॥ २३६ ॥

आलयादि प्रवेशश्च योग्यः स्यात्स्वस्ववर्त्मना ।
नोचेद्धानि प्रदश्चेति ... ॥ २३७ ॥

तस्माल्लोकहितार्थं वै स्वस्वालयगृहेषु सः ।
पूर्वैस्तु पूजितश्चेति ... ॥ २३८ ॥

तथाप्यन्य प्रवेशस्तु समर्यादः प्रशस्यते ।
नोचेन्मन्त्रबलं नेति ... ॥ २३९ ॥

महालयप्रवेशोऽपि स्वस्वरीत्या खलूत्तमः ।
नोचेत्सिद्धिर्नचैवेति ... ॥ २४० ॥*

पञ्चमाशौ च विषये वृथावादो हि जायते ।
यथा वालिवधेचेति ... ॥ २४१ ॥

बहिष्ठासमये स्त्रीणां जनने च मृतौ यथा ।
स्यादाशौचं तथैवेति ... ॥ २४२ ॥

शुक्लशोणित जन्यत्वात्पंचीकरण संभवात् ।
देहोऽखिलस्तथैवेति ... ॥ २४३ ॥*

छायाद्याशौच वर्गस्य मनः क्षोभयितुं क्षमा ।
तद्वन्नान्येति च ज्ञानं ... ॥ २४४ ॥*

स्वकुलाचाररीत्या तु यथा नन्दोऽभवत्तथा ।
वर्तन्तां त इति ज्ञानं ... ॥ २४५ ॥*

ईशेन सृज्यते लोके यथा दुःखीसुखी तथा ।
जातिश्च कर्मरीत्येति ... ॥ २४६ ॥

सूक्ष्मधर्मो मनुष्याणां न बुद्धिविषयः खलु ।
तत्प्रमाणं श्रुतिरिति ... ॥ २४७ ॥

तत्तद्रीत्या तु कर्तुं च तत्तत्कर्माणि चेहवै ।
स्थलादि नियमोऽस्तीति ... ॥ २४८ ॥

एतद्रीत्येह पूर्वैस्तु ग्रामस्य नगरस्य च ।
निर्माणं तु कृतं चेति ... ॥ २४९ ॥

गमनागमनार्थं च कृता मार्गा इहेति वै ।
साधारण विशेषाभ्यां ... ॥ २५० ॥

स्वस्वस्थले स्वरीत्यैव स्वस्वमार्गे च तैः पुनः ।
स्वेच्छागतिः कृताहीति ... ॥ २५१ ॥*

अन्येषां तु स्थले मार्गे मर्यादो लङ्घनं नहि ।
कृतं तैरिति विज्ञानं ... ॥ २५२ ॥

तत्तद्योग्य स्थलानां च गृहाणां क्रय विक्रयौ ।
कृतौ स्वस्वजनैर्हीति ... ॥ २५३ ॥

धर्मशासनशालेय क्षेत्रादेः क्रय विक्रयौ ।
न कृतौ चेति विज्ञानं ... ॥ २५४ ॥*

तत्तत्स्थले च मार्गे च तत्तद्वीथ्यां च तैः पुनः ।
कूपादिर्निर्मितश्चेति ... ॥ २५५ ॥

नदीवापी तटाकेषु तत्तदाचार सिद्धये ।
विभागस्तु कृतश्चेति ... ॥ २५६ ॥

आप्तबन्ध्वाप्तमित्राणि सुभृत्यान्ते त्वपालयन् ।
दीनानन्यांस्तथैवेति ... ॥ २५७ ॥*

विना कर्तृक्रमेणान्यधनं नेच्छन्ति तन्मलं ।
तथा लोकोऽस्त्वितीहाद्य ... ... ॥ २५८ ॥*

छायाग्रहणयन्त्रादिज सुखं सर्वनाशकं ।
तदात्वा दूषितंचेति ... ... ॥ २५९ ॥
ज्ञ

दानधर्मव्रतपरै श्शीलौदार्य गुणोज्वलैः ।
पूजिताह्यर्थिनश्चेति ... ... ॥ २६० ॥

यतीनां पालनं चैव तथा विद्यार्थिनामपि ।
विशेषेण कृतं चेति ... ... ॥ २६१ ॥

कृष्यन्तानि च कार्याणि लोकार्थं हि जितेन्द्रियैः ।
कृतानि स्वस्वरीत्येति ... ... ॥ २६२ ॥

ग्रामे च नगरे चैव तत्तत्कार्याभि वृद्धये ।
निर्मितेति सभाराज्ञा ... ... ॥ २६३ ॥

शान्त्यादि गुणवृद्धर्थं विप्रपूर्वेण निर्मिता ।
य
सा सभेहेति विज्ञानं ... ... ॥ २६४ ॥

अक्षराद्युपदेशे च धर्मन्याय प्रबोधने ।
विप्राहि पूजिताश्चेति ... ... ॥ २६५ ॥*

तत्तद्धर्म विवृद्धर्थं दानं सन्मान वेतने ।
य
तत्तदर्हे कृतानीति ... ... ॥ २६६ ॥

लोके हि कर्तुमेतेषां सौकर्येण च तैरिति ।
कृतो राज्यविभागश्च ... ... ॥ २६७ ॥

नदी गिरिस्थलानां च रीत्या भागः कृतो हि सः ।
तथा भाषानुरीत्येति ... ... ॥ २६८ ॥*

मनुनीति मनुसृत्य प्रजानां पालनं कृतं ।
तत्तद्धर्मानुरीत्येति ... ॥ २६९ ॥

राज्ञां समूहमध्ये तु धर्माधिकश्चयोभवेत् ।
महाराज इतीत्युक्तः ... ॥ २७० ॥

परस्परेण राज्ञां च प्राप्तेऽपिकलहे यदि ।
हानिर्जनस्य नैवेति ... ॥ २८१ ॥

समुद्रवसना भूमिर्येन राज्ञा वशीकृता ।
स एव चक्रवर्तीति ... ॥ २७२ ॥

लोकमुद्दिश्यते सर्वे धर्मगो विप्रपूजकाः ।
तथा सर्व प्रजाश्चेति ... ॥ २७३ ॥

धर्मगो विप्रभक्त्यैव प्रसीदति जगत्प्रभुः ।
अन्यथानैवनैवेति ... ॥ २७४ ॥*

स्वधामकल्पितोऽपीशोधर्मी सूर्यशशांकयोः ।
कान्तवद्वर्ततेहीति ... ॥ २७५ ॥

लोकार्थं ब्राह्मणाश्चाऽपि श्रौतस्मार्त विचक्षणाः ।
तत्तत्कर्माचरंश्चेति ... ॥ २७६ ॥

लोकानां क्षेममुद्दिश्य भारतेवर्ष एवते ।
वासं चक्रुरिति ज्ञानं ... ॥ २७७ ॥*

गायत्र्यादि महामन्त्र सिद्धिमन्तश्चते पुनः ।
ब्रह्मनिष्ठापराश्चेति ... ॥ २७८ ॥

लोकः पञ्चमयत्वात्ते भूसुरा लोकवृद्धये ।
पञ्चपूजापराश्चेति ... ॥ २७९ ॥

सनातनमतस्थाश्च चातुर्वर्ण्यानुलोमजाः ।
आसन्स्वाचाररीत्येति ... ... ॥ २८० ॥

मैत्र्यादि गुणयुक्ताश्च सर्वजाति मतस्थिताः ।
आसन्स्वधर्मरीत्येति ... ... ॥ २८१ ॥

मातुःपितुश्च भक्त्याहि गुरुदेव प्रभक्तितः ।
तेकालमनयंश्चेति ... ... ॥ २८२ ॥

मितं हितं च सत्यं वै प्रोच्य धर्माविरोधतः ।
ते कालमनयंश्चेति ... ... ॥ २८२ ॥

राज्ञो विष्णुस्वरूपत्वाद्राजानः पूजिता जनैः ।
राजभिस्ते तथैवेति ... ... ॥ २८४ ॥

पूर्वोक्तरीति मर्यादोल्लंधनं चेत्तुयैः कृतं ।
ईशेन दण्डिताश्चेति ... ... ॥ २८५ ॥*

जनानुकूलमुद्दिश्य मताचार्या यतीश्वराः ।
चक्रुः क्षेत्राटनं चेति ... ... ॥ २८६ ॥

तत्त्वज्ञानानुगुण्येन ह्यात्मज्ञानादिबोधनं ।
कृतं महात्मभिश्चेति ... ... ॥ २८७ ॥

तद्वच्च शैशवाभ्यस्त तत्तद्विद्या विवेकिभिः ।
तत्तदेवेत्युपन्यस्तं ... ... ॥ २८८ ॥

एतेनचेहते सर्वे कीर्तिलोकं प्रपेदिरे ।
बहुना किमिति ज्ञानं ... ... ॥ २८९ ॥

क्रमेणते च सर्वेऽपि ब्रह्मानन्दं प्रपेदिरे ।
अद्यैवं तर्ततांचेति ... ... ॥ २९० ॥

स्वधर्मबोधिनीं चे मां दृष्ट्वा लोकैस्स्व भक्तिदां ।
क्रियतां स्वस्वकर्मेति ... ... ॥ २९१ ॥

अथेह जित्तशुद्धि स्स्याद्ब्रह्मज्ञानैक साधिका ।
अन्यथा नैवनैवेति ... ... ॥ २९२ ॥

यदा तु चिद्वशुद्धि स्स्यात्तदैव परमेश्वरः ।
सर्वसिद्धि प्रदश्चेति ... ... ॥ २९३ ॥

एतस्मिन्नेवकाले तु दर्शनं भुवि दुर्लभं ।
सद्गुरोर्जायते चेति ... ... ॥ २९४ ॥

एतस्मिन्नेवकाले तु सद्गुरोर्वाक्य मुत्तमं ।
गृह्णाति मतिरस्येति ... ... ॥ २९५ ॥

गुर्वनुग्रहहीनेन नाप्तं ज्ञानपदं क्वचित् ।
इत्येवं निश्चितं ज्ञानं ... ... ॥ २९६ ॥

भाषाक्षर प्रदोऽप्यष्टादश विद्या प्रदस्तथा ।
गुरुर्ब्रह्म प्रदश्चेति ... ... ॥ २९७ ॥

यद्यप्युपासनीयास्ते समभक्त्या स्वशक्तितः ।
श्रेष्ठयाज्ञानदश्चेति ... ... ॥ २९८ ॥

मोक्षैक साधनं ज्ञानं तद्दाताहि गुरुर्महान् ।
तन्महात्मेति विज्ञानं ... ... ॥ २९९ ॥

तस्यस्वरूप तृप्तस्य मार्गे त्रिकरणैरपि ।
गतिर्भक्तिरिति ज्ञानं ... ... ॥ ३०० ॥

वैदिकाचार विद्वेषी न महात्मा महातमः ।
जाति संकरणाद्धीति ... ... ॥ ३०१ ॥

यः करोति स्वतुल्यान्वै श्रितान्करुणया दृशा ।
तत्तुल्योऽन्योन चैवेति ... ॥ ३०२ ॥

ईश एव गुरुश्चेति गुरुरेव शिवात्मकः ।
गुरुदेवैक्य विज्ञानं ... ॥ ३०३ ॥

यदो भयोः प्रसादस्स्यान्मूला ज्ञान निकृन्तकं ।
ब्रह्मज्ञानं तदैवेति ... ॥ ३०४ ॥

जीवन्मुक्तिप्रदं ज्ञानं तत्वमस्यादि वाक्यतः ।
तदैवजायतेचेति ... ॥ ३०५ ॥

एकं सच्चिदनन्तं च सुखं ब्रह्माद्वितीयकं ।
तदैवयातिदेहीति ... ॥ ३०६ ॥

सर्वदुःख निवृत्तिंच परिपूर्ण सुखं तथा ।
तदैवयातिदेहीत्ति ... ॥ ३०७ ॥

तद्ज्ञात्वा ब्रह्मलोकोऽयं शुद्धये सिद्धये निजे ।
धर्मेतिष्ठतु भक्त्येति स्वधर्मा चरणं विदुः ॥ ३०८ ॥

वक्तुः किमपिनास्तीति ह्यनुयोगोऽस्ति धीमतां ।
तद्वेत्तात्वंक इत्येतत् स्वधर्माचरणं विदुः ॥ ३०९ ॥

योऽनन्तस्सच्चिदानन्द ब्रह्मरूपी स्वयं स्ववत् ।
निर्विकारस्सदासाक्षी कारणंचैव सोऽहमों ॥ ३१० ॥

योवैसर्वप्रेरकस्सर्वसाक्षी
तं लोकानां तापशान्त्यै सुभूत्यै ।
ध्यात्वासर्वे स्वस्व कर्माणि कृत्वा
॥ स्वात्मानन्दं प्राप्नुमो वै वयं च ॥ ॥ ३११ ॥

सत्यान्नास्ति परोमार्गोन स्वाचारात्परस्सुहृत् ।
न गुरोरन्य ईशोऽपि ब्रह्मज्ञान प्रदाहिते ॥ ॥ ३१२ ॥

कालस्य परिणामेन सर्वमार्गाश्चते पुनः ।
वैपरीत्येन वर्तन्ते कालस्य कुटिलागतिः ॥ ॥ ३१३ ॥

यदा स्तो वैपरीत्येन धर्माधर्मावुभावपि ।
ईशेन सृज्यते स्वात्मा तदैवभुवि सोदरः ॥ ॥ ३१४ ॥

जन्मान्तरवशात्पुण्यात्सदृष्टो भगवान्मया ।
क्षेत्रे श्रीरामनाथस्य ह्यानन्दे वत्सरे किल ॥ ॥ ३१५ ॥

स्वस्यागमनकालश्च सहस्रपञ्चकात्परं ।
सैकात्समण्डलादब्दादित्युक्तोऽहं च तेन वै ॥ ॥ ३१६ ॥

तदाज्ञया च लोकेऽस्मिन्खण्डे भरतनामके ।
पञ्चदेव प्रतिष्ठा तु कर्तव्येषु स्थलेषु च ॥ ॥ ३१७ ॥

गंगासिन्ध्वोस्सुतीरे च कावेर्यास्तीर एव च ।
नर्मदायास्सुतीरेऽपि तथा केरळदेशके ॥ ॥ ३१८ ॥

तस्याज्ञया तदाह्येषा तस्याज्ञापि निवेदिता ।
प्रभुहार्डिञ्जुनाम्नस्तु राजप्रतिनिधेः पुरः ॥ ॥ ३१९ ॥

मया विज्ञापिता साद्यलोकाचार्यै स्सुगृह्यतां ।
चक्रवर्त्यादिभि स्सर्वैर्गृह्यतां राजभिर्मुदा ॥ ॥ ३२० ॥

तत्तद्धर्मविवृद्ध्यर्थं तस्यागमन सिद्धये ।
क्रियतां अद्यतस्याज्ञा लोकैर्भक्तयेति तैरपि ।
आज्ञप्यतां तथा लोकः तत्तदाचार्यपीठगैः ॥ ॥ ३२१ ॥

यद्ग्राम जननान्मह्यं सर्वेशानुग्रहोऽभवत् ।
तद्ग्राम महिमा भक्त्याचोच्यतेऽद्य शिवाज्ञया ॥ ॥ ३२२ ॥

श्रीहालास्य प्रतीच्यां तु वराहगिरिरुत्तमः ।
कोडैक्कानल्सनाम्ना तु प्रसिद्धोह्यत्रवर्तते ॥ ॥ ३२३ ॥

गिरेस्तस्य महत्वं तु कोहिवर्णयितुं क्षमः ।
शरीरं खल्वसावेव श्रीहरेः क्रोडरूपिणः ॥ ॥ ३२४ ॥

दण्डपाणिरितिख्यातो बालस्वामीति वै तथा ।
सुब्रह्मण्यः प्रसन्नो हि भवत्येतस्य पार्श्वयोः ॥ ॥ ३२५ ॥

तस्मात्तत्पर्वतेचापिह्यगस्त्येन महर्षिणा ।
स्वजन्महेतुनाम्ना च कुंभलिङ्गं प्रतिष्ठितं ॥ ॥ ३२६ ॥

एतस्मात्पर्वतादेव यमुनांशा सुखप्रदा ।
प्रवर्ततेनदीकाऽपि श्रीवराहेतिनामतः ॥ ॥ ३२७ ॥

गंगामहत्वमस्याश्च चैत्रेमासि विशेषतः ।
तत्तीरे वर्तते ग्रामः श्रीप्रत्यञ्चङ्गळाभिधः ॥ ॥ ३२८ ॥

मृकण्डुसूनुरत्रापि मीनाक्षीशेन मोचितः ।
मायापाण्ड्येश्वरोह्यत्र भृगुणाच प्रपूजितः ॥ ॥ ३२९ ॥

कुंभाकरभृगुभ्यांच पंचाक्षर महामनुम् ।
लेभे श्रीदक्षिणास्यस्य सन्निधौ लक्ष्मणाग्रजः ॥ ॥ ३३० ॥

अत्रतुष्टो महादेवो भरताग्रज पूजितः ।
शत्रुहन्त्रेच रामाय ददौ पाशुपतं किल ॥ ॥ ३३१ ॥

वशीकृत मनोवायुजेन संसारवारिधिः ।
लंघितश्च हतास्तेन दुर्गुणा एव राक्षसाः । ॥ ३३२ ॥

प्राप्यसीतां स्वभूतां स पुनर्विष्णुत्वमागतः ।
उपयेमेश्रियंचात्र भृगोर्दुग्धोदधेः प्रियात् ॥ ॥ ३३३ ॥

सहयोगनृसिंह्मेन शेषशायी श्रियःपतिः ।
क्षीरोदधि सुखं त्यक्त्वा सदात्रैव प्रकाशते ॥ ॥ ३३४ ॥

तथात्वाहूयवरद श्श्रीनिवासः प्रसीदति ।
यद्य ज्ञन्मकृतं सर्वं तत्पदेह्यर्पयाम्यहं ॥ ॥ ३३५ ॥

तथा शास्त्रादि संयुक्तो वीरभद्रोऽत्र जाग्रति ।
तथा मातृगणैर्युक्तो दीव्यतीहतु भैरवः ॥ ॥ ३३६ ॥

कलौकार्तयुगं कर्मयोनरः कर्तुमिच्छति ।
सवसेद्ब्रह्मसंस्थाने ग्रामे मेल्मंगळाभिधे ॥ ॥ ३३७ ॥

अस्मिन्ग्रामे स्थितानांच रीतिं वैदिकवर्त्मनां ।
पश्यन्त्यपिच मोदन्ते वसिष्ठाद्या महर्षयः ॥ ॥ ३३८ ॥

तथैव सर्वदेवाश्च श्रीबृहन्नायकीपतेः ।
आज्ञया वै प्रसीदन्ति ग्रामेऽस्मिन्सत्यं उच्यते ॥ ॥ ३३९ ॥

श्रेयसः प्रेयसस्सिद्धै तस्मात्सर्वमतस्थितैः ।
य
श्रीप्रत्यङ्मङ्गळ ग्रामो दर्शनीय श्शुभेच्छुभिः ॥ ॥ ३४० ॥

अनेकविधभीतीनां शान्तयेऽद्यतुसोदराः ।
कर्तव्या तस्यचाज्ञैव सत्यं सत्यं वदाम्यहं ॥ ॥ ३४१ ॥

श्रीप्रत्यङ्मङ्गळे ग्रामे मदीयेऽन्येषु वै तथा ।
कर्तव्यासा मया दृष्टः प्रभवादौ स तैजसः ॥ ॥ ३४२ ॥

ध्यायामिहृदये नित्यं सर्वाभीष्ट प्रदायकं ।
पंचदेवस्वरूपं तं दिव्यकल्याण विग्रहं ॥ ॥ ३४३ ॥

स्वधर्मानन्द सिद्ध्यर्थं तथैवाद्य शिवाज्ञया ।
य
भक्त्योच्यते मयासेयं आज्ञातस्य महाशयाः ॥ ॥ ३४४ ॥

पंचदेव प्रतिष्ठार्थं पञ्चाकारतयेति वै ।
कर्तव्य आलयो ग्रामे मदीये तत्स्थलेषु च ॥ ॥ ३४५ ॥

तत्रालये गणेशस्य नैर् ऋत्यां दिशिसोदराः ।
प्रतिष्ठा वैदिकेनैव कर्तव्याऽभीष्टदो हि सः ॥ ॥ ३४६ ॥

तथा तत्रैव कर्तव्यात्वाग्नेय्यां दिशिसोदराः ।
आदित्यस्य प्रतिष्ठा हि सर्वाधिव्याधिवारकः ॥ ॥ ३४७ ॥
तथैव तत्र कर्तव्यावायव्यां दिशिसोदराः ।
प्रतिष्ठा चांबिकाया हि सर्वशक्ति प्रदायिनी ॥ ॥ ३४८ ॥
तथैव तत्र कर्तव्यात्वैशान्यां दिशिसोदराः ।
प्रतिष्ठा श्रीमहाविष्णो स्सर्वसंपत्प्रदोहि सः ॥ ॥ ३४९ ॥
महेश्वर प्रतिष्ठा च मध्यभागे तु सोदराः ।
तथैव तत्र कर्तव्या ब्रह्मज्ञान प्रदोहि सः ॥ ॥ ३५० ॥
वैदिकेनैव पूजा च सायं प्रातर्दिने दिने ।
कर्तव्या क्षेममुद्दिश्य लोकानां तस्यचाज्ञया ॥ ॥ ३५१ ॥
तदालयेषु सर्वेषु विप्रैरेव दिनेदिने ।
वेदपारायणं चापि कर्तव्यं लोक वृद्धये ॥ ॥ ३५२ ॥
धर्मस्थानाश्च विद्याश्च चतुर्दश तथा द्विजैः ।
गायन्तां शास्त्ररीत्यात्र चोपवेदास्तु तद्विदैः ॥ ॥ ३५३ ॥
तथा तत्राज्यहोमश्च कर्तव्यो वै महात्मभिः ।
अष्टोत्तरशतेनैव मूलमन्त्रैर्दिने दिने ॥ ॥ ३५४ ॥
तथाऽपि तत्रकर्तव्यो गायत्री मन्त्रहोमकः ।
अष्टोत्तर सहस्रेण ब्रह्ममङ्गळदायकः ॥ ॥ ३५५ ॥
सर्वाधारतया लोके प्रणवोह्येव वर्तते ।
तच्चिह्नध्वजिनी तस्मात्सेयं भूमिस्तु वर्धतां ॥ ॥ ३५६ ॥
कृतमेतच्चकार्यं चेन्मतिस्स्यात्स्वस्ववर्त्मनि ।
नान्यथैवेति वक्तुं तु ह्याज्ञप्तोऽहं शिवेन वै ॥ ॥ ३५७ ॥
स्वप्ने स भगवान्मांतु स्वधर्माचरणं विदुः ।
इत्युक्त्वान्तर्दधे तस्मान्मयोक्तं ग्रन्थरूपतः ॥ ॥ ३५८ ॥

एवं निवेदिताह्याज्ञा भक्त्यातस्येह सोदराः ।
ज्ञात्वाचैतदयं लोको युक्तं यत्तत्करोत्विह ॥ ॥ ३५९ ॥

शान्ति स्त्रिविधदुःखानां तथावाप्तिश्च संपदां ।
ब्रह्मज्ञानं च सर्वेषां स्वाचारेणैव संभवेत् ॥ ॥ ३६० ॥

स्वधर्मबोधिनीं चेमां यः पठेच्छ्रुणुयादपि ।
कृत्वा स्वस्वोचितं धर्मं याति ब्रह्मसनातनं ॥ ॥ ३६१ ॥

यज्जन्मात्रेय गोत्रे च यन्मातुर्नैव वंचना ।
यत्पिता मानिनां मानी सोऽहं नौमि सतां पदं ॥ ॥ ३६२ ॥

श्रीपद्मनाभ लक्ष्म्योर्हि सूनुनेयं प्रकीर्तिता ।
मया श्रीदक्षिणामूर्ति शर्मणेति शिवाज्ञयो ॥ ॥ ३६३ ॥

ध्यायेहृत्पद्मसंस्थां शशिधरमकुटां
पंचवक्त्रां त्रिणेत्रां, स्वच्छाभां शुद्धवस्त्रां
करकलितलसदान मुद्रां शुभांगीम् ।
(ज्ञ)
सर्वाधिष्ठानभूतां सततमभयदां ब्रह्मविद्यां
शिवाख्यां, भक्तानां शान्तमूर्तिम्
विबुधवरनुतां सर्वसंपत्प्रदात्रीं ॥ ॥ ३६४ ॥

सर्वसिद्धि प्रदस्यास्य कर्तुं प्रज्ञोदयाय वै ।
सदावच्मीह सर्वेषां ब्रह्मैवाह मथो शिवो ॥ ॥ ३६५ ॥

ओ तत् सत्.

ब्रह्मार्पणमस्तु । परिपूर्णोऽयं ग्रन्थः ।



ஓம் உ ஸ்ரீ:

# ஸ்வதர்ம போதினீயின்

த்ராவிடபாஷா தாத்பர்யமான

# தத்வதர்சினீயின் முகவுரை.

சர்வ ஜனங்களுக்கும் மங்களம் உண்டாகட்டும்.

அரசர்கள் தர்மநீதிதவராமல் பூமியை பரிபாலனம்செய்யட்டும். (உலகின் செழிப்பிற்கு காரணர்களான) கோ வர்க்கங்களுக்கும் ப்ராஹ்மணர்களுக்கும் க்ஷேமம்விசேஷமாய்உண்டாகட்டும். சர்வஜீவ கோடிகளும் சுகமடையட்டும்.

ஓம் ஸ்ரீ மஹாகணபதிதுணை. ப்ரஹ்ம வித்யாதேவி சஹாயம். ஸ்ரீ குருக்ருபை துணை. எல்லாம் சிவமயம்.

சர்வ தேவதாரூபியும், விசேஷமாய் பஞ்சதேவதாஸ்வரூபியும், சச்சிதநந்தாநந்த ப்ரஹ்மஸ்வரூபியுமான ஸ்ரீ சநாதந தர்மேசுவரர் எப்போதும் துணை.

ஓம். எப்போதுமே உண்மையில் ப்ரஹ்மஸ்வரூபிகளான மனித வர்க்கத்திய சகோதரர்காள்!

நமது அக்ஞானத்தால் நமது ஸ்வரூபத்தை நாம் மறந்தோம். ஆனதால் நாநாப்ரகாரமான அநித்ய சுக துக்காத்மகங்களான ப்ரபஞ்ச விஷயங்கள் சமுத்ர அலைபோல் தோன்றுகின்றன. அனுபவிக்கவும் படுகின்றன. அந்த யாவும் எங்கிருந்து, எப்போது, எதைக்கருதி வந்தன என்று கேட்கவும் பதில் சொல்லவும் யாவராலும் முடியாது. அதிகமென்ன, மனதாற்கூட எண்ண முடியாது. ஏனெனில் ஸ்ருஷ்டி அனாதி காலமாய் நடந்துவருகிறது. தவிர நான், எனது என்ற அபிமானம் உள்ளவரை இவை யாவும் உண்மைபோல் பிரகாசிக்கும். லோகரஹஸ்யம்

என்பது இதுதான். இதை சர்வக்ஞர்களான மஹரிஷிகள் அறிந் திருக்கிறார்கள். இவ்வாற்றால் அவர்கள் போல் இதிலிருந்து நாமும் கரையேறவேண்டும். இதற்காகவே கருணையுடன் வைதிகாதி சகல மத மார்க்கங்களும் உலகில் ப்ரகாசிக்கின்றன. உண்மையில் சர்வ ஜாதி மத குல ஆசாராதிகளும் அத்வைதாமிருத மஹாசமுத்ரத்தில் சங்கமிக்கிற கிளைநதிகள் உபநதிகள் இவைகளோடு கூடின மஹா நதிகள் தான். இதையறியாது இவ்வுலகம் வீண் கலக்கம்செய்து கொண்டு தபிக்கிறது. இதனால் எவ்வித ப்ரயோஜனமும் கிடை யாது.

தவிர ஈசுவரானுக்ரஹத்தால் கிடைத்ததும் பகுத்தறிவுள் ளதும் கிடைக்க அரிதானதும் ஆனதால் உத்தமுமான மனுஷ்ய ஜன்மம் வீணாகிறது. இந்த ஜன்மம் வீணானால் மறுபடி எந்த ஜன் மம் ஏற்படுகிறதோ, யார் அறிய முடியும். ஆனதால் இந்த ஜன்மத் திலேயே அத்வைதாமிருதபானம் செய்ய நாம் வழிதவராமல் யத் னம் செய்யவேண்டும். அவ்விதம் செய்தால் இந்த ஜன்மம் ப்ர யோஜனமுள்ளதாகும். அவ்வித யத்னம் யாதெனில் சொல்லு வோம்: சர்வம் ப்ரஹ்ம மய ; இதில் கொஞ்சமேனும் வித்யாசம் கிடையாது, என்று மனதில் அத்வைதபாவம் கொண்டு தன் சரீ ராதி குடும்ப யோக க்ஷேமங்களின் விஷயமாய் ப்ராப்தானுசாரமாய் வருவது வரட்டும், நடப்பது நடக்கட்டும் என்று அதிகக்கவலைப் படாமல், சீதோஷ்ண சுகதுக்காதிகளை காமக்ரோதாதி துர்க்குண த்யாகபூர்வமாய் ஆத்மபுத்தியால் சகித்துக்கொண்டு, பொதுவாக யாவரிடமும் சமமான ஜீவகாருண்யத்துடன் குல தர்மங்களுக்கு விரோதமன்னியில், பரோபகாரம் செய்துகொண்டு, விசேஷமாய் ஸ்வதர்மோக்தமான, ஹிம்சாகார்யத்தை அஹிம்சா தர்மமாய் அவ சியம் அங்கீகரித்து, எதனிடமிருந்து உலகிற்கோ தனக்கோ பர மோபகாரம் ஏற்படுகிறதோ, அதனிடம் ஈசுவராம்சம் அதிகம்விளங் குகிறது, என்று மனதில் உத்தம பாவனைசெய்து, இவ்விதமாய் நம் யாவராலும் அவசியம் பிறதூஷணையன்னியில் ப்ரயோஜனத்தை எதிர்பாராது, ச்ரத்தாபக்தியுடன் தன் தனது தேவதார்ப்பபண புத்திகொண்டு ஸ்வாசார தர்ம கர்மாக்கள்தான் இவ்வுலகில் கட்டா யம் செய்யத்தகுந்தன, மற்றவையல்ல; இதுதான் யத்னம்என்பது,

மற்றதல்ல. இவ்வித யத்னமுள்ளவர்களை எவ்வித கஷ்ட காலங்களிலும் பகவான் காப்பாற்றுகிறார். இவ்வித யத்னத்தால்தான் சர்வ பாபங்களும் நீங்கி சித்தசுத்தியுண்டாகிறது. அதன்பிறகுதான், ஈசுவரானுக்ரஹத்தாலும் குருக்ருபாகடாக்ஷத்தாலும் மூலாக்ஞானத்தைப் போக்கடிக்கவல்லதான, மோக்ஷமடைய முக்ய சாதகமான, உத்தம தத்வஞானம் உதயமாகிறது, அந்தகாலம்தான், த்ரிகால சித்தமான, ப்ரஹ்ம ஸ்வரூபமாவோம். இவ்வாற்றால் இவ்வுத்தம லாபமடையக்கருதி நம் யாவராலும் புத்தித்தெளிவு அவசியம் சம்பாதிக்கத் தகுந்தது.

அதை உத்தேசித்து என்னால் வணக்கத்துடன், ஈசுவரானுக்ரஹத்தின்பேரில் அவரது ஆக்ஞையால், வரும்மங்களத்தை சூசனை செய்கிறதும், தத்வதர்சினீ என்ற இந்த தமிழ் தாத்பர்யத்துடன் கூடினதுமான ஸ்வதர்மபோதினீ என்ற ஓர் உத்தம கிரந்தமானது, இப்போது இவ்வுலகில் தெரிவித்துக்கொள்ளப்படுகிறது. இதன் மூலம் இவ்வுலகிற்கு மஹதுபகாரம் செய்ததாயும் ஆதலால் கிருதார்த்தனாயும் என்னை நான் எண்ணிக்கொள்கிறேன்.

களங்கமுள்ள சந்திரனை பகவான் சர்வேசுவரன் சிரோபூஷணமாக்கிக் கொள்ளவில்லையா, 'அவ்விதம் அவர் செய்துகொண்டு ஆநந்தப்படவில்லையா; அதுபோல் சர்வேச ரூபமான இவ்வுலகமும் இந்த க்ரந்தத்தை ஸ்வீகரித்துக்கொண்டு ப்ரம்மானந்த மடையுமென்றே எண்ணுகிறேன். அதற்காக சதா சர்வேசனை த்யானம் செய்கிறேன்.

ஓம் மங்களம்.

மேல்மங்கலம்,
ஈஸ்வர ஹூமாசிமீ 28உ

ஸ்ரீ தக்ஷிணாமூர்த்தி சாஸ்திரி.

ஓம் உ ஸ்ரீ:

ஸ்வதர்ம போதினியின் தமிழ் தாத்பர்யமான

# தத்வ தர்சினீ



ஓம்

ஸ்வதர்மேசுவரன் துணை.

ஸ்ரீ மஹாகணபதி துணை.

ஸ்ரீ மஹாசரஸ்வதி துணை. பரமகுருவிற்கு நமஸ்காரம்.

எல்லாம் சிவமயம்.

ஓம் ஸ்ரீ: ஓம்கார ரூபமாயும் கம் காரரூபமாயும் சர்வ விக்னங்களையும் போக்கடிக்கிறவராயும் சர்வ வேதங்களாலும் பூஜிக்கப்படுகிறவரும் ப்ரசன்னமுகமுள்ளவருமான, ஸ்ரீமஹாகணபதியை ஸ்வதர்மஞானசித்தியின்பொருட்டு நமஸ்கரிக்கிறேன். (1)

சர்வ ஜீவராசிகளின் ஹ்ருதயகமலத்திலிருந்துகொண்டு தனது விலாச பூதர்களான அந்த ஜீவராசிகளை அவரவர்களது பூர்வ கர்மானுகுணமாய், எந்த பரமாத்மா ஏவிக்கொண்டிருக்கிறாரோ, சரணமடையத்தகுந்த அந்த சர்வேசனை, ஸ்வதர்மசித்தியின் பொருட்டும் ப்ரம்மானந்த சித்தியின்பொருட்டும் சதா த்யானஞ்செய்கிறேன் (2)

சர்வ விக்னங்களையும் போக்கடித்து சர்வாபீஷ்டங்களையும் அனுக்ரஹம் செய்கிற ஸ்ரீ மஹாகணபதி ஆதிவ்யாதிருணாதி சர்வ தாபங்களையும் போக்கடித்து, தர்ம சாதகமான சரீரம், பெண்டு பிள்ளைகள் முதலியவற்றிற்கு சகல சௌகர்யங்களையும் கொடுத்து, திவ்ய தேஜஸ்ஸையும் தீர்க்காயுசையும் அனுக்ரஹம் செய்கிற பகவான் ஆதித்யன், ஜயப்ரதாபாதி சர்வ சக்திகளையும் சர்வசித்திகளையும் அனுக்ரஹம் செய்யும் ஜகதம்பிகை, கீர்த்யாதி சர்வ மேன்மைகளையும் தனதான்யாதி சர்வ சம்பத்துக்களையும், பரமபதவியையும் அனுக்ரஹிக்கிற ஸ்ரீ மஹாவிஷ்ணு, ம்ருதிஜன்மகரமான பாபங்களுடன் கூடிய மூலாக்ஞானத்தை ஹதம் செய்து ப்ரம்ம வித்யாசம்பத்தை கருணையுடன் அனுக்ரஹம் செய்கிற பரமசிவன், ஆகிய பஞ்ச மஹாமூர்த்திகளையும், வாக்தேவியையும், ப்ரம்ம நிஷ்டர்களையும், ஸ்வாசார சம்பன்னர்களையும் பக்தியுடன் த்யானித்து சரணமடைகிறேன். (3)

குறிப்பு:—பஞ்சபூதாத்மகமான ஜகத், ஜீவன், ஈசுவரன் என்ற இத்தோற்றமுள்ளவரை, அபிமானம் உள்ளவரை, நிர்க்குண ப்ரஹ்மோபாசனை, மிகமிக துர்லபம் தவிர அநிர்வசனீய வைபவமுள்ள அந்த ப்ரஹ்மமே சகுணமாய் பலவிதமாய் ப்ரகாசிக்கிறது, பஞ்ச மஹா பூதத்தில் எல்லாம் அடங்குகிறது. அவ்வித பூதங்களும் பூத கார்யங்களும், அதிகமென்ன, சர்வதேவர்களும் பஞ்சமஹாதேவதைகளில் அடங்கிவிடுகிறார்கள். ஆதலால் சுருதிவழியாய் இந்த மங்களாசரணம் செய்யப்பட்டது.

அளவிட முடியாத மஹிமையுள்ள அந்தசர்வேசுவரன் ஸ்வேச்சாமாத்ரத்தால் ப்ராஹ்மணஜந்மாவதாரத்தால் இந்த பூமிதேவியை மங்கள உத்பத்தியோடு கூடினவளாய் கூடிய சீக்கிரம் செய்யப் போகிறார்.

(குறிப்பு:—ஆநந்த-ஸூ தை-மீ ஸ்ரீராமேசுவரத்தில் நேரில் பார்த்த திவ்யபுருஷன்: ப்ரபவ வருஷ ஆதியில், எங்களது கிராமத்தில் ப்ரசன்னமாய் பிரகாசிக்கிற ஆஹூய வரதராஜப்பெருமாளுக்கு அபிஷேகத்திற்கு ஏற்பாடு பண்ணினசமயம், அர்ச்சகர் ஸ்ரீநிவாசய்

யங்கார் என்ற பெரியவர் பகவான் பேரில் ஏதாவது ஸ்லோகங்கள் கவனம் செய் என்று என்னிடம் சொல்ல, வழக்கமில்லையே யோக்யதையும் போராதே தவறுதல் வந்தால் தோஷமாகுமே என்று நான் தெரிவிக்க, பகவான் உனக்கு அவச்யம் அநுக்ரஹம் செய்வார்; நீ செய் என்று அவர் என்னை கட்டாயப்படுத்த, அதன் பேரில் அன்றிரவு கவலையுடன் ஸ்ரமபரிஹாரம் செய்துகொள்ள பஞ்சபஞ்ச உஷக்காலத்தில் மறுபடி ஸ்வப்னத்தில் திவ்ய தர்சனம் கொடுத்து இந்த க்ரந்தத்தில் நான் தெரிவித்துக்கொண்டிருக்கிற சமாசாரங்களையும் ஆக்ஞையிட்டு ஸ்வதர்மாசரணம்விது:, மேலே தோன்றும் என்று அநுக்ரஹமும் செய்து அந்தர்த்தானமானார். இவ்வாற்றால் ப்ரபவ வருஷத்தில் அநுக்ரஹம் ஏற்பட்டதால் இந்த பூமியும் சுப்ரபவையாக ஆவது சத்யம் என்பதை இவ்வுலகம் அறியட்டும் தவிர ஸ்ரீ கிருஷ்ணாவதாரமாய் 2000-த்து சொச்சம் வருஷத்துக்குமேல் ஸ்ரீ சங்கராவதாரம் நடந்தது. அதன்மேல் 2000-த்து சொச்சம் வருஷமாச்சுது. இவ்விதமாய் இப்போது கலி 5000-த்துக்குமேல் வருஷங்கள் ஆகின்றன. இதற்குள்ளும் அப்போதப்போது மஹான்கள் அவதரித்துமிருக்கிறார்கள். தற்சமயம் மனுஷ்ய சக்தியால் சீர்பட முடியாத அவ்வளவு கலிபாதை ஏற்பட்டிருப்பதை உலகமும் அறியும். கலியின் முடிவில் நடக்கும் அவ்வளவு கொடுமைகளும் எங்கும் ஊடாடுகின்றன. ப்ரளயமாய் புது யுகம் ஏற்படவோ வெகு வெகு காலமிருக்கிறது சீர்பட்டாக வேண்டும். ஆதலால் விஜயமாகிறார் என்பதை அறிந்து ஹே? உலகமே ஜாக்ரதையாக இரு.) (4)

அவ்விதம் விஜயமாகும் அந்த பகவான் உலகில் நம்மெல்லோரையும் ஸ்வாசாரதத்பரர்களாய் செய்து நம்மெல்லோருக்கும் சதா சர்வமங்களங்களையும் அநுக்ரஹம் செய்யட்டும். (5)

வைதிகமார்க்கத்தில் தானும் இருந்து மற்றவர்களையும் உசிதமானபடி இருக்கச்செய்ய எவன் விஷயமாய் அநாதிகாலமாகவே சர்வேசுவரானது ஆக்ஞை ப்ரவிருத்தியாயிருக்கிறதோ அவன் ப்ராஹ்மணனாகிறான். (6)

சர்வப்ரபஞ்சமும் ப்ரஹ்மத்தினிடமே தோன்றி நின்று மறைந்துகொண்டிருப்பதால் சர்வஜீவகோடிகளும் ப்ராஹ்மணர்கள்தான். ஆயினும் அததற்குத் தகுதியான லோகோபகாரமான அவச்ய காரணத்தால் அநாதிகாலமாகவே கௌரவிக்கத்தகுந்த அந்தந்த வர்க்கத்தின் பெயரால் அழைக்கப்படுகிறார்கள். ஆதலால் எவனொருவன் இத்தத்வமறிந்து மனதில் அத்வைதபாவனை செய்து ஸ்வாசாரத்தில் இருக்கிறானோ அவன் எவனாயிருந்தாலும் ப்ரஹ்ம நிஷ்டர்களாலும் பூஜிக்கப்படுகிறான். (7)

வரும் மங்களத்தை சூசனை செய்கிற ஸ்வதர்மபோதினீ என்ற இவ்வுத்தம க்ரந்தம் ஈசுவராக்ஞையால் அன்புடன் என்னால் தெரிவித்துக்கொள்ளப்படுகிறது. (8)

தர்மவிஷயகமான அபாரஞானமெங்கே? பாலபுத்தியுள்ள நானெங்கே? ஆயினும் இது பார்க்கத்தகுந்ததே. ஏன்? ஈசுவராக்ஞையைத் தெரியப்படுத்துகிறது. (9)

ஸ்வதர்மம் அதாவது தனது கடமை, என்பது யாதெனில் ஈசுவராக்ஞையால் கொஞ்சம் தெரிவித்துக்கொள்ளுகிறேன். அறியப்படுகிறதும் அறியப்படாததுமான சர்வப்ரபஞ்சமும் ப்ரஹ்மஸ்வரூபம் தான் என்று மனதில் உத்தமபாவனை செய்யவேண்டும். இவ்விதமான உத்தம ஞானத்தை ஸ்வதர்மாசரணமாக பெரியோர்கள் அறிகிறார்கள் (சொல்லுகிறார்கள்).

(குறிப்பு:—இந்த க்ரந்தத்தில் தெரிவித்துக் கொண்டபடி அந்தக்கரண விருத்தியை சீர்ப்படுத்திக் கொண்டால், உள்ளது புரிந்து ஸ்வோசிதமாய் நடந்து சுகமாய் வாழ்ந்து ப்ரஹ்மஞானம் உதயமாய் சாச்வதமாகலாம்), (10)

சர்வாதாரமான ப்ரஹ்மம் சத்யம், ஜகத் பொய்யானது, மற்றொன்று கிடையாது. ஆஸ்திக்யம் என்பது இதுதான். (11)

இவையெல்லாம், ப்ரம்ம ஸ்வரூபமாக தன்னை தெரிந்துகொள்ளாததால், அக்ஞான கல்பிதங்களே. ஸ்வப்னம் போன்றது. மற்றப்படி வேறில்லை. ப்ரபஞ்ச ரஹஸ்யம் இதுதான். (12)

